# विषयसूची








# कांग्रेसः

कांग्रेससुघटितशक्तेः भंगस्समभवदिदानीम् ।
तुंगाद्रिरेश्शिखरात् भृंगारोऽपतत् भुवि ॥

निस्सीमगमीरजलधेः दुरधिगमं दुरवगाहम् ।
सुविकसितकमलमुकुळसुन्दरं सरश्शुष्कम् ॥

अविच्छिन्ना पयोधारा विच्छिन्नाद्य विभाव्यते ।
पयश्च कुल्यारूपा सेतू च्छित्वा प्रभ्रश्यति ॥

अकलुषं कलुषितमभूत् सुमधुरं लवणमभूत् ।
विशदं कषायितमभूत् भूयो विधिवैपरीत्यात् ॥

किमयं सागरसंगमः किं पुरमालिन्यसंक्रमः ।
अथवोषरसंश्रयः समाजवादा श्रियः ॥

अमृतभांडः शिथिलः प्रशिथिलः कपालितः ।
खण्डितः प्रखण्डितः निर्विपृडवलेह्यते नूनम् ॥

प्रजाहितमनादृत्य आत्महितं पुरस्कृत्य ।
निर्निबन्धं प्रवर्तते स्खलद्गतिः कांग्रेसः ॥



# सम्पादकीयम्

## चन्द्रलोकजिगमिषा

गृहस्थस्य गृहान्तरदर्शनकुतूहलं, ग्रामीणस्य नगरदर्शनाभिलाषः, नागरिकस्य महानगरदर्शनोत्साहः, एकदेशीयस्यापरदेशसन्दर्शनोत्साहः, एकखण्डीयस्थस्यान्य-खण्डदिदृक्षा इतिवत् भूगोलवासिनो जनस्य चन्द्रगोलदर्शनकौतूहलं सहजमेव । परन्तु दुर्लभत्वभावनया तत्प्रयत्नाद्विरता अभूवन् जनाः । परन्तु बालानां तु चन्द्रस्य स्वायत्तीकरणे तेन सह क्रीडने महानभिलाषः भवतीति अनुभवतः ज्ञायते । रात्रौ आहारस्वीकाराय अनिच्छन् हठी अपि बालः चन्द्रमासः प्रदर्शनपूर्वकं, चन्द्रकथा-कथनपूर्वकं, चन्द्रविषयकगीतगानश्रावणपूर्वकम् वा अविघ्नम् भोजयितुं शक्यते । सर्वेषां अयं चन्द्रः मातुलो भवति संबन्धेन यतः लोकमातुः लक्ष्म्या अयं अनुजः । मातुलदर्शने मातुलकथाप्रसंगे वा बालानां आनन्दस्य अवधिरेव न भवति ।

इयं कथा उच्यते – पुरा रामचन्द्रः यदा अवचनो बाल आसीत तदा एकस्यां रात्रौ चन्द्रशालायां अभ्यवहारार्थं याचमानः चंद्रस्य स्वकरस्थितिमीहमानः हठमकरोत । सः चंद्रानयनं स्वहस्ते समर्पणं च कांक्षमाणः भृशं रोदितुमारभत । ते आदयितुं अनुनेतुं वा कौसल्या तच्चेट्यश्च बहून् यत्नानकुर्वन् । ताः नाना-वर्णाकृतीनि नानाविधानि खेलनोपकरणानि रामचन्द्रस्य समार्पयन्, विविध-लघु-वाद्यानि अवादयन्, विविधध्वनीरकुर्वन्, बहूनि गीतानि चागायन्, बालं तं कक्षे अंसेचारोप्य उत्क्षेपण - प्रक्षेपणभ्रमणादिभिः अलालयन्, डोलामारुप्य आक्षेप-विक्षेपादिभिः निद्रागीतिभिः व्यनोदयन् । परन्तु श्रीरामचन्द्रः स्वरोदनात् न व्यरमत । स च चंद्रम् पश्यति चन्द्रं दर्शयति रोदिति अविच्छिन्नम् । दत्तं क्रीडनकं अधः पातयति, करतलेषु कक्षेषु अंसेषु डोलायां शय्यायां वा न विश्राम्यति स्म ।

अन्ते अयं समाचारः अगतिकतया दशरथाय निवेदित आसीत्। स च महाराजः अतीव दुःखितः वसिष्ठेन सहान्तःपुरमाजगाम। दशरथोपि श्रीरामचन्द्रस्य हठं निवारयितुं अनेकानुपायाननुष्ठीय विफलमनोरथः रोदनक्लान्तं स्वसुतं द्रष्टुमपारयन् स्वगुरुं वसिष्ठमेव प्रार्थयत। बालरामस्तु सर्वदा चन्द्रं निरीक्षते तद्दिशि करं प्रसारयति अवाक् वक्तुं न शक्नोति च। वसिष्ठः तस्य अभिलाषं अजानात्। परन्तु चंद्रः कथमानीयते कथम् वा श्रीरामचन्द्राय समर्प्येत वा। अन्ततः काचन युक्तिः प्रतिभाति स्म तस्य। तदनुगुणं स कंचनदर्पणम् समानाय्य तं बालरामस्य करे अदात। तत्र च चन्द्रः प्रतिफलति स्म। तत् दृष्ट्वा रामचन्द्रः चन्द्रं स्वहस्तगतं मत्वा रोदनाद्विरम्य धात्रीदत्तं अभ्यवहर्तुमारेभे। न तावन्मात्रमेव मध्ये मध्ये दर्पणस्थाय चन्द्रायापि रामचंद्रः स्वोच्छिष्टम् भोजयामास।

एवं बालकानामतीव प्रियतमश्चन्द्रः। यूनां वृद्धानां अपि चंद्रग्रहणे आसक्तिरस्त्येव। अपितु तद्ग्रहणासामर्थ्यात् विरक्ताः भवन्ति तद्ग्रहणकर्मणि ते।

द्वित्रदशकेभ्यः वर्षेभ्यः उड्डीयमानवर्धमानकानां कथाः प्रचुरा अभवन्। तत्र तत्र देशेषु तत्तत्कालेषु च देदीप्यमानानां वर्धयानकानां आकाशे दर्शनं अभूदिति प्रथा आविरभूत। तत्परिशोधनार्थं च महान्तः प्रयत्नाश्च आचरिताः। यद्यपि बहवः सः भ्रान्तेर्विलास इति वदन्ति तथापि निश्चितरूपेण अभ्रान्तरूपेण मानवसहितानां तेषां दर्शनमपि अवर्णयन्। एतेषां वर्धमानकानां चन्द्रलोकस्थजनानां यानपात्रत्वमाशङ्कितं, तेन सहैव भूलोकजनानां आपदपि अनुमिता। एवं सम्भावनया आत्मलोकरक्षणार्थं चन्द्रलोकगमनार्थं च मनुजस्य मनसि चोदनाकृतप्रवर्तना समजनि। सम्पन्नयोः रष्यामेरिकयोः एतज्जिगमिषा परस्परजिगीषा रूपेण समुद्भूता। वैज्ञानिकसंपद्विशिष्टयोः तयोः देशयोः तदभिवर्धनाय नूतनलौहादिसम्पादनार्थं च कामना एतत्प्रयत्नेष्वचोदयत। एवं दिनदिनाभिवृद्धे प्रयत्ने अम्मेरिका मानवान् द्वितीयवारं चन्द्रतले अवातारयत सुसुखं च तान् प्रत्यानाययत भुवम्। रष्या च विना मनुजमेव स्वयानं चन्द्रे अवतार्य तत्प्रत्यानाययितुं विफल-

प्रकृत्य ※ स एकाकी न रमेतेत्युच्यते । ब्रह्मा माभूत, ईशानश्च माभूत्काममः नित्यमुक्तानामसत्ता न कथञ्चिदपि हि सेत्स्यति । तथा च एकाकिना न कथमपि सेद्धुमलमीश्वरस्य ॥ कथं तर्हि ※ स एकाकी न रमेतेति श्रुतिराम्नासीत् ? भगवातो धिया तु एवमाम्नासीत् । भगवान् हि संसारिचेतनसंश्लेषसमुत्सुकतां स्वभावत एव बिभर्ति तदलाभे सति स्वयमेकाकीव सन् स्वमनसि रतिलेशमपि न धत्ते । एवं नाम श्रावयन्तीश्रुतिः संसारिचेतनेषु परमात्मनो वाचामगोचरं हि प्रेमभूमानमाविष्करोति ।

२१. जीवात्मनश्चैतन्यप्रयुक्तभोक्तृत्वे सत्यपि निष्कृष्टवेषतया सिद्धेन पारतन्त्र्येण भोक्तृत्वं तत बलात सुदूरतोऽपसार्यते । प्रकाशःप्रचुरोऽपि प्रदीपः प्रभाकरस्य परिसरे यथा ह्यसत्कल्पो भवति, तथैव जीवात्मनो ज्ञातृत्वबलायात-कर्तृत्वानुगुणं भोक्तृत्वमपि न पारतन्त्र्यसमानाधिकरणं भवितुमलम् । परमचेतनो भोक्ता, चेतनो भोग्य इति परमार्थे परिष्कृतिशालिनि सति, चेतनलाभस्तस्यैव भोक्तुः परमात्मनः पुरुषार्थ इति निस्संशयविपर्ययं निश्चयते ।

२२. ※ स्वादयन्निह सर्वेषां त्रय्यन्तार्थं सुदुर्ग्रहम् । स्तोत्रयामास योगीन्द्रः तं वन्दे यामुनाह्वयम् ॥ ※ इति सुप्रसिद्धस्तुतिपद्यरीत्या सुदुर्ग्रहत्रय्य-न्तार्थाननुप्रवेश्य भगवता यामुनमुनीन्द्रेणानुगृहीते स्तोत्ररत्ने ※भवन्तमेवानुचरन्निरन्तरं प्रशान्तनिःशेषमनोरथान्तरः । कदाऽहमैकान्तिकनित्यकिङ्करः प्रहर्षयिष्यामि सना-थजीवितः ※ इत्यस्मिन् पद्यरत्ने सुष्ठु प्रकाशितोऽयमर्थः । 'भगवन्! भवन्तमनुभूय कदाऽहं प्रहृष्येयम्, इति तावद्वक्तव्यमः नैवमुक्तमिह । अपितु 'भवन्तं कदा प्रहर्षशालिनं करिष्यामि' इति तावत्सुस्पष्टमन्वग्राहि । एतेन प्रहर्षभागी भगवानेवेति सम्यगवगम्यते । प्रहृष्यति यः स एव तत्फलभाक, स एव कृषिकतेति च निर्धार्यते । अतश्च चेतनलाभः परमपुरुषस्यैव पुरुषार्थ इति सिध्यति ।

अथानुयुज्येत परैः, "भवन्तं कदाऽहं प्रहर्षयिष्यामि" इति यामुनाचार्यैरनुगृहीतमस्तीति सत्यमेव, भवन्तमनुभूय कदाऽहं प्रहृष्येयम्' इति वचनव्यक्तिस्सदाचार्यदिव्यग्रन्थेषु किमहो कुत्रापि नास्त्येव ?. इति । ❋ अहमन्नमन्नमदन्तमद्मीति श्रुतिवाक्यं विवृनवद्भिरस्माभिरधस्ताद्यदुक्तम्, तन्न विस्मर्तव्यम्। तत्तु सततं मनसि सुदृढं निधातव्यम् । पुरुषार्थलाभेन प्रहृष्यतो भगवतो हर्षमुदीक्ष्य हृष्यत्येवायं चेतन इति नैतत्कोऽपि निगूहति । ❋ कदा प्रहर्षयिष्यामीति सूक्तिं व्याचक्षाणाः श्रीमत्कृष्णसमाह्वगुरुवराः—"स्वकीययाऽनुवृत्त्या सर्वेश्वरस्य सम्पद्यमानो हर्ष एव हि चेतनस्योद्देश्यः" इत्यनुजगृहुः । इमामेव सूक्तिमनुसृत्य स्तोत्रभाष्ये निगमान्तगुरुवरैरनुगृहीतम् — "[प्रहर्षयिष्यामि] त्वद्दासभूतस्य मे त्वत्प्रहर्ष एव प्रधानं प्रयोजनमिति भावः । एवञ्च स्वाधीनस्वार्थकर्तुत्वभ्रमरहितकैङ्कर्यप्रार्थना कृता भवति" इति। गीताया नवमाध्याये ❋ मन्मना भवेति श्लोकभाष्यतात्पर्यचन्द्रिकायां च "आश्रितसंरक्षणं स्वलाभं मत्वा प्रवर्तते" इति स्फुटतरमनुजगृहे भगवन्निगमान्तदेशिकेन ।

२३. भगवता भाष्यकारेण श्रीरामानुजार्येण ❋ अनावृत्तिः शब्दादिति चरमसूत्रश्रीभाष्ये "न च परमपुरुषस्सङ्कल्पः अत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति" इत्यनुगृहीता सूक्तिरेकैव ननु पर्याप्ता प्रकृतविषये प्रामाणिकानां मनःप्रसत्तये। अत्र तावदेष विषयः:—स्वतन्त्रो भगवान् मुक्तं पुरुषं स्वस्वातन्त्र्यबलेन कदाचिन्मोक्षात् प्रत्यावर्तयितुं प्रभवति खलु, तथा च मुक्तस्य पुनरावृत्तिस्संभवितुमर्हत्येवेति शङ्का जाता । सूत्रकारस्तावदत्र समादधे 'शब्दात् न पुनरावृत्तिः' इति । ❋ स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते ❋ इत्युपनिषदाम्नानात् ❋ मामुपेत्य तु कौन्तेय ! पुनर्जन्म न विद्यते ❋ इति गीताचार्येण स्वयमुक्तत्वाच्च मुक्तस्य पुनरावृत्तिप्रसङ्गो नैवेति तदर्थः। प्रसक्तशङ्काया एतेन हृदयंगमं समाधानं नाकीर्णमिति भगवान् रामानुज आशिश्ये ।

* केवलं स्वेच्छयैवाहं प्रेक्षे कञ्चित् कदाचन * इति स्ववचनेन, *स्वातन्त्र्य-मैश्वरमपर्यनुयोज्यमाहुः * इति तत्वज्ञ-अभियुक्तवचनेन च अप्रधृष्यनिरङ्कुशस्वा-तन्त्र्यशालीति प्रसिद्धो भगवान् तादृशेन स्वातन्त्र्येण मुक्तात्मनां पुनरावृत्तिं यदि सम्पादयेत्तर्हि शास्त्रं किमहो प्रतिरोद्धुं प्रभवतीति प्रत्यवस्थानतादवस्थ्येन श्रीभाष्यकारो भगवान् स्वयं समुचितां समाहितिमवतारयति तत्रैव श्रीभाष्ये। स्वतन्त्रोऽपि सन्नीश्वरो नोन्मतः, न च मूर्खो नाप्यरसिकः। सत्यसंकल्प इति तु प्रथितः। चिरन्तनस्वकीयमनोरथविरुद्धतया नैव स चेष्टितुमलम्। चेतनमेकमुपलभ्य प्रहर्षं प्राप्तुं स एव परपुरुषः प्रयासाननुभवतीति हन्त क्षुद्रा अमी जनाः कथमिव प्रबोद्धुं प्रभवन्ति ? * वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः * इति गीतावचनस्यैकस्य विमर्शी-नाप्यलम्। दुःखेनापि लब्धुमशक्यो दुर्लभः, सुतरां दुर्लभः सुदुर्लभः। मम वासुदेव एव सर्वमित्यध्यवस्यन्तमधिकारिणं भगवान् पुनःपुनरन्विष्यापि अलभमानस्सन् अनवधिकमवसादमनुभवन् रुदन्नेव * स महात्मा सुदुर्लभ * इति गायति स्मेति बालिशोऽपि नन्विदमनायासमवगच्छेत्। तथाच चेतनलाभाय महत्तरान् कृषिगणान् कृत्वा तत्फलोपभोगकाले हन्त कथमिव भगवान् विघटितमनोरथो भवेत् ? मनोरथा-नामतटान् प्रवाहान् वर्धयन् स्थितो भगवान् कथमिव लब्धं चेतनं प्रत्यावर्तयेत ? इति अभेद्यां समाहितिमनुगृह्णाति भगवान् भाष्यकारः — * न च परमपुरुषस्स-त्यसंकल्पः अत्यर्थप्रियं ज्ञानिनं लब्ध्वा कदाचिदावर्तयिष्यति * इति। अत्र लब्ध्वेतिपदम् अतिमनोहरम्, तत्वार्थाविबोधनचतुरं च। "अत्यर्थप्रियम् आगतं ज्ञानिनम् नच कदाचिदावर्तयिष्यति" इत्यननुगृह्य "अत्यर्थप्रियं ज्ञानिनं लब्ध्वा" इत्यनुगृहीतवता श्रीभाष्यकृता चेतनलाभ ईश्वरस्यैव पुरुषार्थ इति स्पष्टीकृतं हि भवति। अनुपदमेव "य एवमाह" इत्युपक्रम्य गीतावचनमप्युदाहरति। अत्र सुदुर्लभ इति पदं जीवनाडीभूतम्।

२४. गीतायाम् * वासुदेवस्सर्वमिति स महात्मा सुदुर्लभ इति स्थले



# राजाजीकथा ४४



## पङ्कजाक्षी तु रक्षिता

"अबरः"

साम्बशिबरावोः पितुः शङ्करराबोः विविधविद्यासु ललितकलासु च महानभिनिवेशः, महती अभिरुचिः । स्वपुत्रमपि तथा कर्तुं तेन महोदयेन बहु प्रयतितम् । सोऽपि विद्यासु निष्णातः कलासु च प्रवीणः संजातः । पितुः कालानन्तरमेव साम्बशिवरावोः विवाहमंगळं सम्पन्नम् । मातुल-सुतैव, विंशतिवर्षदेशीया गौरीति नाम्ना ।

  

किं तया भार्यया या संगीतं न जानाति । विद्यमानाप्यविद्यमानैव सा तादृशी । एवं मन्यमानेन सांबशिवरायेण भार्या संगीताभ्यासार्थं कुम्भकोणस्य नेदिष्ठे मीनाक्षिपुरे कस्याश्चित्संगीतविदुष्याः सकाशं प्रेषिता । परिचारिकाऽपि काचित् तया सह प्रेषिता । "त्वरा न कार्या, सत्यपि विलम्बे सम्यगभ्यस्य आगन्तव्य" मित्युक्त्वा प्रेषयामास स स्वभार्याम् ।

षड्वर्षैरभ्यस्तम् । प्रायेण अभ्यासोऽवसितः । तथाऽपि सांबशिव-रावोः न विश्वासः । द्रष्टुं गच्छत्येकं सुहृदं प्रेषयत् । सोऽपि गतः, गौर्याः संगीतं श्रुत्वाऽगतश्च ।

"श्रुतिस्सिद्धा, किन्तु ताल-ज्ञानं किंचिदिव तृप्तिकरं ने" त्याह

स स्निग्धः । स तु महामहानां गायकोत्तमानां गानं श्रुतवान् । एतादृशानां बहुश्रुतानां आक्षेपः सांबशिवरावोः न सुवार्यः ।

"एवं चेत् तिरुवारूरु सुब्बय्यर्-भागवतस्य सकाशे उचित-शिक्षा-ग्रहणं कर्तव्य" मित्युक्त्वाऽयाहि इति तमेव सुहृदं पुनः प्रेषयामास भर्ता ।

  

तेनैव प्रकारेण तिरुवारूरुवासः चतुर्भिर्वर्षैः कृतो गौर्या । सुब्बय्यर् भागवत एव स्वयं सन्देशं प्रेषितवान् – "गौर्याः तालज्ञानं सिद्धप्रायं, तथापि वर्षद्वयमपेक्ष्यते, अत्रान्तरे निर्दुष्टं विना कमपि लोपं सा सम्यग्गातुं प्रभवेत् । किन्तु त्वरते, किं क्रियताम् । न तथा कर्तव्यम्" इति ।

एतत् ज्ञात्वा सांबशिवरायः "त्वरया किं प्रयोजनम् ? संगीतस्य त्वरितगतेश्च न सहसंबन्धः । अतः सावकाशम् द्वौ वर्षौ शिक्षा-ग्रहणमवश्यं कर्तव्य"मिति पुनः प्रेषितवान् वार्ताहरम् ।

  

द्वौ वर्षौ व्यतीतौ । पूर्वोक्तः स्निग्धः इदानीं नास्ति; स कालधर्मं गतः । निजकार्यदर्शिनम्, कस्यचिन्महतो विदुषः पुत्रं आनन्दरङ्ग-नामधेयं प्रेषयामास सः । "गत्वा दृष्ट्वा श्रुत्वाऽगम्यतां, कियन्मात्रमभ्यस्तमिति निष्पक्षपातं परिशील्यागम्यताम्" इत्युक्त्वा तं प्रेषितवान् ।

सोऽपि गतः पुनरागतश्च । "संगीतविषये न कोऽपि लोपः, न कोऽपि गायकः स्वामिन्याः समो भवितुमर्हति । परन्तु पदोच्चारणमेव किंचिदिव साधनीयं प्रतिभाति; ईषत् द्राविड-स्वरता श्रूयते । यदि सा दूरीक्रियेत तर्हि अनुत्तमं गानमुपपन्नं भविष्यति" इति स्वपरिशोधनाफलितं प्रकटीचकार सः ।

"बाढम् , कस्सन्देहः ? संगीतं निर्दुष्टं निरवद्यं च कुतो न स्यात् , अथाऽपि साहित्ये उच्चारणे च चेल्लोपः तर्हि तद्गानम् श्राव्यम् कथम् भवेत् ? अतः किं कर्तव्यमिदानीम् ? " - इति पृष्टम् सांबशिवरायेण ।

"इयन्मात्रस्य किं चिन्तया । तञ्जापुर्यां सुब्रह्मण्यशास्त्रीति कश्चित् सुगृहीतनामधेयः । स महान् - यो वा को वा स्यात् योऽपि कोऽपि वा स्यात् - लोपश्चेत्स्यात् निश्शेषम् निराकुर्यात्, संस्कुर्याच्च विक्रियां" इत्याह आनन्दरङ्गः ।

★ ★ ★

ततस्तंजापुरीं गता गौरी । तत्र सा द्वौ वर्षौ काव्यनाटकादीन्यधीत्य साहित्यविद्याप्रावीण्यं संपाद्य परीक्षामुत्तीर्य स्वस्थलं पुनरागता ।

★ ★ ★

अत्रान्तरे सांबशिवरायोः शरीरे किंचिदिव अस्वास्थ्यं जातम् । द्वौ सिद्ध-वैद्यौ चिकित्सामाचरन्तावास्ताम् । तद्दत्तानां औषधानां ऊष्म-प्रभावेण शरीर-संविधानं ईषद्रौष्ममेवाऽभूत् । ततश्च सः मद्र-पुरीस्थे महाचिकित्सालये चिकित्सां प्राप्तवान् । "वयसि पञ्चाशद्वर्षदेशीयोऽसि, चिकित्सा सादृगुण्यम् दुष्करम् इव प्रतिभाति; पाषाणौषधानामयम् प्रभावः, सिद्धवैद्ये विद्यमानः प्रमादः किलाऽयम्" इति सीमायाः समागतो वैद्य-विद्या-परिबृढः भिषग्वरो गोविन्दमीनन्बहोदयः प्राह ।

★ ★ ★

गौरी गृहमागतेति वार्ता ज्ञाता । सांबशिवरायः "अस्तु अहं गृहं गच्छामि तावत् ; दैवमेव शरणं" इति वैद्यादनुमतिं प्राप्तः गृह मागतः ।

★ ★ ★

सांबशिवरायः गौरीं न प्रत्यभिज्ञातवान्, साऽपि भर्तारं विलोक्य "किमयमेव वा मम पतिदेवः" इति संदिग्धा ।

संगीतं स्थगितम्: भर्तुः शुश्रूषा प्रारब्धा; षण्णामेव मासानां न किंचिद्भेषजम्, न किमप्यौषधं । सांबशिवरायः स्वस्थस्संवृत्तः । स इदानीं सार्थकनामधेयः । गौर्याः परिचर्याप्रभावेण सांबशिवरायः यथापूर्वं सांबशिवरायस्संजातः । उभावपि दम्पती प्रहृष्टौ । बहुवर्षेभ्यः गुरुशुश्रूषयाऽभ्यस्तं संगीतम्, अधीत्याधिगतं साहित्यं वा न प्रस्तौति सांबशिवरायः, नापृष्टा गौरी च ।

  

पुत्री-रत्नमजायत । महता प्रेम्णा वात्सल्येन च "पङ्कजाक्षी" इति नाम कृतं वैभव-मङ्गलेन । प्रेम-पूर्वकव्यवहारे तदपत्यं "पङ्कजं" आसीत् ।

वत्सा पङ्कजं विद्याभ्यासोचितं वयः प्राप्ता ।

"विद्यालयं प्रति नेयं प्रेषणीया" इत्याह सांबशिवरायः । "ननु ग्रामे सर्वेऽपि खलु स्वस्वशिशून् प्रेषयन्ति" - "कुतो न वयं" इति गौरी प्रतिवादं कृतवती, तथाऽपि न फलितम् । सांबशिवरायः हठम् साधयित्वा "माऽस्तु तावत्पठनम्" इति निश्चयमुक्तवान् । "अलमनेन, यन्मयाऽनुभूत" मिति तेन भावितम् स्यात् । यत्किंचिद्वाऽस्तु, पङ्कजाक्षी तु रक्षिता ।

पठनं पाठनं चैव सुखजीवनहेतवे ।
यदि स्यादसुखोदर्कं, तेन किं जीवितेन किम् ?

संगीतमपि साहित्यं मनोरञ्जनहेतवे ।
उभयं चेद्भयं दद्याद्भञ्जनं न तु रञ्जनम् ॥

जीवयात्रा-विधाने हि विद्याप्राधान्यमिष्यते ।
विद्याविधानं न स्याच्चेत्समीचीनं वृथा वृथा ॥



# न्यायमाला

## "अवरः"

त एव परेषां उपरि प्रभावम् उत्पादयितुं समर्था भवन्ति, ये वा संभाषणे चतुरा भवन्ति। संभाषणावसरे तच्च चातुर्यं बहुमुखम् बहुविधम् च केषांचित् सिध्यति। विवक्षितस्य प्रस्तुतस्य अप्रस्तुतैरपि बहुभिरंशैर्युक्ति कल्पनया सरसं सहासं, सोत्प्रासं सोल्लासं च भाषितुम् प्रभवन्ति भाषणचतुराः। तेषां भाषणावसरे बहूनां न्यायानां, युक्तिरत्नानां, लौकिकानुभवानां सहजसिद्धम् सांगत्यम् प्रस्फुरति। एतादृशानां लौकिकन्यायानां परिशीलनं संस्कृतजिज्ञासूनां अत्यन्तोपकारायेति न वक्तव्यापेक्षा। अतः "न्यायमाला" प्रारभ्यते।

### 1. अन्धगजन्यायः

अस्मिन् न्याये अन्धानां गजस्य च प्रसक्तिरस्ति। अतोऽस्य न्यायस्य "अन्धगजन्याय" इति नाम। अन्धानां गजस्वरूपनिर्णय इवेति तदर्थः। केचित् अन्धाः गजमवगन्तुं प्रवृत्ताः। गजः कीदृशः, कथम्भूतः, इति प्रश्ने समुपस्थिते कश्चिदन्धः करिकरं गृह्णन्, गजम् लम्बमानम् अजगरम् मेने। अन्यः कश्चित् गजपादान् परामृशन्, गजः किल स्तम्भानां समाहारः इत्याह। अपरः कश्चित् गजस्य वालम् स्पृशन् सर्पाकारो गज इत्यकथयत्। एवमन्यः कश्चित् गजकर्णं समालभ्य शूर्पाकारो हि गजः इति सिद्धांतितवान्।

सर्वेऽप्यन्धाः गजस्य एकैकमवयवं गृहीत्वा ईदृशः तादृश इति विविधम् वर्णयामासुः। परन्तु गजः अन्यादृश एवास्ति। स न अजगरोपमः, नाऽपि स्तम्भसमावेशः, न सर्पाकारो न वा शूर्पाकारः। किन्तु अजगरोपमेन शुण्डादण्डेन शोभितः, स्तम्भसदृशैः, पादैर्युतः, सर्पाकारं वालम्, शूर्पाकारम् कर्णं च इतस्ततः चालयन् कश्चिज्जङ्गमो जन्तुविशेषः, गज इत्यभिधीयते।

अत्र यथा केवलावयवानां कर-पाद-बाल-कर्णानां ज्ञानेन अवयविनः गजस्य ज्ञानम् पूर्णतया अन्धानां न सिद्धम्, तथैव अल्पज्ञानेन समस्तम् ज्ञानम् समधिगतमिति ये वा मन्यन्ते ते अन्धगजन्यायस्य उदाहरणम् भवितुमर्हन्ति। आंशिकसत्यं उपलभ्य इदमेव पारमार्थिकसत्यमिति ये वा भ्राम्यन्ति तेऽपि अन्धगजन्यायेन गृह्यन्ते।

किं च सत्पदार्थं बहुधा वदन्ति बहवः पण्डिताः। "एकम् स द्विप्रा बहुधा वदन्ति" इति श्रूयते च। एकमेव सद्वस्तु अधिकृत्य बहूनां बहुधा वादाः प्रवृत्ताः। तथाऽपि सर्वेऽपि वादाः आंशिकसत्यम् प्रख्याप-यितुमलमित्यत्र न कोऽपि संदेहः। पारमार्थिकतया यच्च सत्यम् तदेव सत्। एवम् तत्त्वजिज्ञासायामपि अन्धगजन्यायस्य अस्ति महानवकाशः।

अतो मा भूम गजान्धाः सत्यसंदर्शने।

अन्धाः गजं एवंभूतः, तथाभूतः इति निरूपयामासुः किल; तत्सत्यं वा न वा इति परामर्शे एकैकनापि अन्धेन प्रोक्तम् किंचित्किंचित सत्यमेव न त्वसत्यम्। अंशतः सत्यमपि तन्न यथार्थम्; यथार्थतया यद्गृह्यते; सर्वतः सर्वात्मना च यत्सत्यम् तदेव गृह्यते व्यवहाराय। न केवलम् शुण्डायाः गज इति व्यवहारोऽस्ति; एवम् पादानां, पुच्छस्य, श्रोत्रस्य वा किन्तु सर्वावयवविशिष्टस्य-अर्थात् अवयविन एव गज इति व्यवहारः।

एवमेव भगवन्तम् सर्वेश्वरमधिकृत्य बहूनि दर्शनानि प्रस्थितानि। दर्शनानां प्रवर्तकाः महान्तो ऋषयः। ते च क्रान्तदर्शिनः, विज्ञाः प्रज्ञान-समन्विताः; न अन्धाः। तेषां मतेषु सत्यसंदर्शनमेव प्रख्यापितम् आप्त-भावेन, परप्रतारणम् मनागपि नास्ति। तेषां प्रवचनानां यः सारः स एव मार्गः सर्वेश्वरम् भगवन्तमधिगन्तुम्। अस्मिन् विषये अन्धगज-न्यायेन मा भूम विवादमानाः।

# सुभाषितानि

लें० श्री यन्. रामनाथार्यः

अतिथिर्बालकश्चैव स्त्रीजनो नृपतिस्तथा ।
एते वित्तं न जानन्ति जामाता चैव पञ्चमः ॥ ॥ ३०७ ॥

These five persons never realise the financial difficulties of others viz one's guest, children, women, the state, and not the least one's son-in-law.

गजानां मन्दबुद्धिश्च सर्पाणामतिनिद्रता ।
ब्राह्मणानामनेकत्वं त्रयं लोकोपकारकम् ॥ ॥ ३०८ ॥

A great benifit is derived by the people by reason of the elephants being dullwitted, the snakes being ove. slumbrous, and the Brahmins being disunited.

अतिदाक्षिण्ययुक्तानां शंकितानां पदे पदे ।
परापराधभीरूणां दूरतो यान्ति संपदः ॥ ॥ ३०९ ॥

Riches forsake persons, who are too modest and suspicious of every step they take and also too conscious as to what others may think of their actions.

अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम् ।
यच्च बाहुबलं भीरोः व्यर्थमेतत्त्रयं भुवि ॥ ॥ ३१० ॥

The learning of person who is too modest, the wealth of a miser, the strength of arms of a coward, are useless to anyone on the face of earth.

प्रियः प्रजानां दातैव न पुनर्द्रविणेश्वरः।
आगच्छन् कांक्ष्यते लोकैः वारिदो न तु वारिधिः॥ ॥ ३११ ॥

A giver of wealth in charity is liked by people and not one who is merely a lord of wealth; the clouds are looked up to with eagernous (since they give water) and not the sea (the repositiry of water).

न लभन्ते विनोद्योगं जन्तवस्सम्पदां पदम्।
सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः॥ ॥ ३१२ ॥

No one succeeds in obtaining wealth without putting forth effort. The Devas enjoyed Nectar only after undergoing the trouble of churning the milk ocean.

दाता बलिः प्रार्थयिता च विष्णुः दानं भुवो वाजिमखस्य कालः।
नमोस्तु तस्यै भवितव्यतायै यस्याः फलं बन्धनमेव जातम्॥

At the time of the Horse Sacrifice, the giver of charity (was no other than) Bali (the king of deamons), Lord Vishnu was the recipient and the whole earth was bestowed in charity. Still confinement of Bali was the result. Salutations to Fate (whose decress none can escape).

(शेषम्)

# सुलभपाठमाला ३९

## वृक्षाः २ (कदली)

कदली विचित्रतरो वृक्षः वृक्षाणां सामान्यतः शाखाः उपशाखाश्च भवन्ति यथा आम्रस्य। कदल्यास्तु शाखा एव न सन्ति किं पुनः उपशाखाः? परन्तु मूलकन्दं परितः शिशुवृक्षाः प्रजायन्ते। ते च तथैवोपेक्षिताश्चेत् मातृवृक्षस्य दौर्बल्यमापादयन्ति। फलतः तस्याः फलानि अल्पानि असाराणि वा भवेयुः। अतः प्रायशः शिश्वंकुरान् दूरीकृत्य पृथक् उपक्षिपन्ति येन ते अपि पृथक् पुष्पफलानि प्रसूयेरन्।

कदलीवृक्षः कन्दादुद्भवति। अयं स्तम्भाकारः दीर्घविशालपत्रः अतिमनोहरः दृश्यते। प्रकाण्डश्च तस्य स्निग्धमसृणः शीतलः श्यामलः बहुसुन्दरो भवति। मन्दवातेन आन्दोलितानि तस्याः पत्राणि मन्ये अतिथीनां श्रमापनोदनार्थं मन्दं वीजयन्तीति। आतपतप्तः कोपि वा तन्मूले पार्श्वे वा उपसर्पेत् तदैव विस्मृततापभारः आनन्दनिर्भरो भवेन्नूनम्। अस्य वृक्षस्य अंकुरावस्थातः आफलान्तं प्ररोहः विचित्रो वर्धते। अंकुरमध्यात् नवदलावर्तः क्रमशः बहिर्याति। स च क्रमशः अग्रतः विकसन् वृंतस्य बहिर्निर्गमसमये पार्श्वतः तिष्ठति। तादृशनववृंतस्य अधोभागात् अन्यपत्रावर्त उद्भवति। एवं प्रकाण्डः क्रमशस्थूलो भवति, अधःस्थितानि च पत्राणि शीर्यन्ति। अन्ते वृक्षमध्यात् पुष्पगुच्छः बहिर्निर्गच्छति। स च गुच्छः अनेकाभिः पुष्पराजिभिः परिवृतः प्रतिराजि च श्यामारुणेन दृढच्छदनाच्छन्नः वर्तते। पुष्पवृन्तनिस्सरणेन वृक्षस्य अभिवृद्धिः स्थगिता भवति। पुष्पगुच्छकस्य मूलतः एकैकस्य छदस्य शीर्णतातदन्तर्वर्तिन्याः पुष्पराजेः सर्वस्याः अथवा प्रबलपुष्पाणां वा शलाटुत्वेन परिणामः। एवं रीत्या पुष्पगुच्छात् शलाटुगुच्छत्वेन परिणमितानां तेषामेव

शलाटूनां कालक्रमेण फलता भवेत्। युवशलाटून् समीक्ष्य शलाटुकाण्डं प्रधानकाण्डतो विच्छिद्य धूमसंयं जननिवातस्थानसंरक्षणादिभिः द्रुततरं फलयन्ति। कदलीवृक्षः फलान्तः व्रीह्यादिवत्।

कदली आमूलाग्रं जनोपयोगाय भवति। तन्मूलकन्दः आहारव्यंजनत्वेनोपयोक्तुं शक्यते। औषधेषु उपयुज्यत इति भिषजां संमतम्। प्रकाण्डोपरि त्वक् च समप्रमाणकर्तिता आहारपात्रत्वेन उपयुज्यते केषुचिद्देशेषु। सैव अवयवेषु विभक्ता सूत्ररूपिणी पुष्पमालाग्रथने मालाकारैः नित्यमुपयुज्यते। सैव स्थूलतया त्रोटिता बन्धनतन्तुत्वेन सर्वैरुपयुज्यते। प्रकाण्डन्तर्वर्ति काण्डकिसलयं किसलयकाण्डो वा आहारव्यंजनत्वेनोपयुज्यते।

तथाहि – किसलयकाण्डं प्रथमतः लघुचक्रत्वेन खण्डयन्ति। खण्डने हि तन्मध्ये लघुतन्तून् तर्जनीं परिवेष्ट्य निस्सारयेयुः तत्खण्डकाः। ततः तानि चक्राणि सूक्ष्मशः खंडयित्वा दृढमुष्ट्या संपीड्य जलभागम् यथासाध्यं निष्कामयित्वा मुद्गदाल्या नारिकेळेन मरिचलवणहरिद्रा हिंगुराज्यादिभिः उपस्कृत्य भोजनव्यंजनत्वेन साधयन्ति। काण्डकिसलयखंडैः दधि लेह्यं, कूटं, चोष्यं च सृजन्ति विज्ञाः। पत्राणि च भोजनपात्रत्वेन प्रचुरमुपयुज्यन्ते। पर्वदिनेषु श्राद्धदिनेषु चावश्यं कदलीपत्राणामेव आदरः कांस्यरजतस्वर्णपात्रवतामपि गृहेषु। पत्रमध्ये यः कांडः स पत्रकांडः कथ्यते। तस्य द्रवश्च (स्वरसः) मद्यपानोन्मत्तस्य मदापहरणे अव्यभिचारितमौषधं भवति। एतद्रसपानानुपदमेव मद्यपः सुस्थः भविष्यति। पुष्पवृन्तः अथवा फलवन्तः सुधालेपकानां कृते अमोघं साधनम् भवति। जर्जरीकृतमुखेन तेन कांडेन ते लेपकाः सुसमं सरलं च भित्तिषु सुधां विलिप्य गृहस्वामिनां आदरपात्राणि भवन्ति। पुष्पगुच्छच्छदः आतपशुष्कः अग्निना मषीकृतः अङ्गारत्वेन (तिलकत्वेन) ध्रियते। पुष्पाणि च पुष्पच्छदेभ्यः पृथक्कृतानि तन्मध्यवर्तिभिः लिपकांडैः (चरैः) विना कृतानि

लवणजलेन सह क्वथितपीडितानि चणकदळैर्नारिकेळबीजादिभिः अन्यै-रुपकरणैश्च संयोजितानि आहारव्यंजनत्वेन उपयुज्यन्ते । पुष्पांतस्थम् नवमुकुलं तु रक्तविरेचनरक्तातिसारादिषु उपयुज्यते । शलाटवः चोष्ये, कुटे चोपयुज्यन्ते । तत्खंडाः उष्णतैलविलोलिताः गर्गरिकाः क्रियन्ते । त एव चणकाढकदलैः विमिश्रिता शुष्कव्यंजनत्वेन निरूप्यन्ते ।

कदळफलानां उपयोगस्तु सर्वैः ज्ञायत एव । तानि मधुराणि स्निग्धानि मृदूनि सुगन्धीनि च भवन्ति ।

कदलीषु अनेकविधा वर्तन्ते शाककदली (बोंतरटि) स्थूलशलाटुकी दीर्घविशालपत्रयुता च भवति । अस्याः फलानि न तथा स्वादूनि भवन्ति यथान्यज्जातेः । केषांचन फलानि श्यामानि भवन्ति अन्येषां हरिद्राणि इतरेषां रक्तानि धूम्रवर्णानि च भवन्ति । सर्वेष्वपि कदलीफलेषु गिरि-कदली (मलवाळ) फलम् पथ्यकरम् भवति ।

यद्यपि आंग्लवैद्याः कदलीफलं पथ्यं आदिशन्ति तथापि आयुर्वेदज्ञाः तत्फलम् अपथ्यत्वेनैव मेनिरे । तत्र किं कारणमिति ते एव जानन्ति ।

अभुक्त्वामलकं पथ्य भुक्त्वा तु बदरीफलम् ।
कपित्थं सर्वदा पथ्यं कदली न कदाचन ॥

इति प्रसिद्धोयम् श्लोकः । न कदाचन इत्यस्य भोजनात्पूर्वं भोजनात्परम् भोजनकाले वा कदलीफलम् न उपयुज्यादित्येवार्थः ।

अथापि अव्यवहितक्षणे तदुपयोगनिषेधवाचित्वस्य स्वीकारे भोज-नात्पूर्वं परं वा कालव्यवधानेन तद्भक्षणम अनुमोद्यम् । अथवा सर्वदा इत्यस्य पूर्वोक्तभोजनपूर्वापरकालमात्रानुवादितायाः स्वीकारे तु कदल्याः भोजनपूर्वापरकालयोः केवलं अपथ्यत्वम सिद्ध्यति । तेन सहैव भोजन-काले कदलीफलभक्षणस्य पथ्यत्वम् च सिद्ध्येत् ।

अर्थनिर्णये अनुभवज्ञा सहृदयाः प्रमाणम् ।

# राजाजी - कांग्रेसश्च

"भवरः"

राजाजी राजनैतिक क्षेत्रे महान् प्रसिद्धश्च इति न वक्तव्यतापेक्षा। ब्रह्म क्षत्रयोः संमेलनम् चेत्, ब्राह्मणाः शक्त्याश्च यदि संगमः, आचार्य-निष्ठयाः व्यवहारदक्षतायाश्च यदि समन्वयः समीचीनः अपेक्ष्यते – तर्हि संक्षिप्तरूपेण "राजाजी राजर्षिः" इति समाधानम् समुचितम् भाति।

राजाजी यद्यपि व्यावहारिकदशायां राजनैतिकक्षेत्रे सक्रियतां नाऽध्यास्ते; तथाऽपि गौरवस्थानम् अद्याप्यधिरूढ एव। आचार्यो हि सः। आचार्यः परतत्वे निष्ठावान् सन् आत्मानं अस्वतन्त्रमेव प्रकाशयेत्; परन्तु अयमाचार्यः परतत्वम् स्वात्मन्यारोप्य आत्मानम् स्वतन्त्रमेव प्राचीकशत्। स्व पक्षं स्वतन्त्रपक्षमुदघोषयत् - इत्यस्ति वस्तु स्थितिः।

किन्तु, कदाचित् राजाजी कांग्रेसवादी, तत्कार्यकर्ताचेति ऐतिह्यम् नापलपितुम् शक्यते। राजाजी राजर्षिरिति पुनरुद्घाटनवसरः इदानीं संप्राप्तः; स्वतन्त्र-पक्षस्थापनेन तदाचार्यपीठम् प्राप्तमिति बहवो मन्वीरन्; परन्तु एषोऽस्मि तद्व्यतिरेकी। कांग्रेससंस्थायाः बहिर्विद्यमानोऽपि अय-माचार्यः कांग्रेस् नेतॄणां बहूनामद्यापि आचार्य एव सन् गौरवभाजनम् भवति।

यदि भारते निर्निबन्धम् निस्सन्देहम् च राजकीयगौरवपीठम् अधिरुह्य विराजमानाः के इति प्रश्नः अनुचित इति न मन्येत तर्हि द्वौ एव परिगण्येरन्। तत्र प्रथमः गांधिमहोदयः, स तु गतः। द्वितीयस्तु तत्सहचरः अद्यापि वर्तमानः। स च राजाजी राजर्षिरिति कण्ठोक्तिः। महात्मना गांधिना सूचितम् - कांग्रेसः कृतकृत्यताणभजत् इति। परन्तु नेहरूपण्डितेन अर्धमङ्गीकृतम्, उत्तरार्धं स्वयं निरूपितवांश्च कांग्रेस करिष्य-

माणकृत्यमप्यस्ति इति । तदप्यधं तदीयजीवनलीला समापनेन अवसित-प्रायमिति - इदानीन्तन कांग्रेस-संघटनैः व्यक्तमासीत् । कांग्रेस नेतॄणां कृतनिश्चयान् पदक्रमांश्च समीक्षमाणः राजर्षिः क्वचित् निरोधम् क्वचित् प्रबोधम् च करोति । कांग्रेसः यदि सजीवः तर्हि संतुष्यतामयमेव राजाजी सर्वप्रथमो भवेदिति संभावये ।

"एक्यम् चेदपेक्षितम् मास्त्यन्यायम् प्रवर्तय; यदि अशक्तोऽसि आत्मसमर्पणम् कुरु; यदिदमपि न सम्मतम् तर्हि द्विधा भव" – इति संक्षिप्तोऽयं सन्देशः अधुना राजाजिना कांग्रेसपक्षे स्थितान् उद्दिश्य कृतः कियत्समीचीनमिदम् व्यवहारकौशलम् राजर्षेः ।

कांग्रेस एकम् सद् द्विधा चेद्भवितुमिच्छति; तर्हि तयोः लभ्यमानं दायभागम् "चर्खा कस्यचित् चेत् वृष-द्वयमन्यस्य" इति सूचितवान् ।

किमयम् आचार्यः कांग्रेसपक्षस्य श्रेयोभिलाषी उत विनाशकारी आहोस्वित् सहकारबोधी आहो विघटनकारी-कालो वक्ष्यति ।

गांधिमहोदय इव अयमप्याचार्यः मध्यस्थः अनुवर्तमानः राजकीय-गुरुरिति निश्चप्रचम् ।

## अस्मद्भारतम् (मुक्तकम्)

अस्मद्भारतं, अस्मदीयजननीं, नेतॄन् अशेषान् जनान्
आत्मार्थं, स्वकुटुम्ब-संघपरिपोषार्थं, तथा संस्कृतेः ।
व्याप्त्यर्थं च, सदा सदाशयमहासंदोह-संस्कारितम्,
मिश्रं प्राकृतशक्तिभिर्गण-मतं संसत्पतिं संश्रये ॥

— "अधरः"



# भ्रातरौ

रचयिता – वै. नागराजरावः
(विचक्षणः)

आस्तां मंगळगिरौ रामः सोमः च इति द्वौ भ्रातरौ । तयोः रामः ज्येष्ठः, सोमः कनिष्ठः । रामस्य सप्त अपत्यानि । अपितु सोमस्य न सन्तानः । तौ द्वौ भ्रातरौ अतीव साधू ।

एकदा रामः एवमचिन्तयत् "मम सोदरस्य सोमस्य न संतानः; तस्मात् तस्मै यत्किंचिदुपकर्तव्यम्" इति । ततः प्रतिदिनम् रामः व्रीहि-गोणीं पृष्ठे निक्षिप्य सोदरस्य सोमस्य गृहे गूढम् निक्षिप्तवनासी ।

सोमोऽपि एवमचिन्तयत् "मम भ्रता सप्तसंतानः । धान्यमधिक-मपेक्ष्यते आहाराय तस्य । अतः मया किंचिदुपकर्तव्यम्" इति । तस्मात् सोमोऽपि व्रीहिगोणीं पृष्ठे आरोप्य रामस्य गृहे गूढं निक्षिप्तमवर्तत ।

एवं प्रतिदिनम् ते कुरुतः स्म । अधिकां नूतनां गोणीं दृष्ट्वा रामः सोमश्च आश्चर्यचकितौ कारणं अजानन्तौ आस्ताम् । अन्ते एकदा रात्र्य-वसानवेलायां तौ द्वौ भ्रातरौ गोणीपृष्ठौ मार्गे सममिलताम्, अजानीतां च परस्परविचारणया च अन्योन्योपकाराय धान्यपूर्णां गोणीं अन्योन्यस्य गृहं प्रति गूढम् नयत इति । पुरजनाः तत् दृष्ट्वा आश्चर्यचकिताः । ईदृशौ द्वौ भ्रातरौ अश्रुतपूर्वौ मया । भ्रातृत्वं नाम ईदृशमेव खलु ।



# संस्कृत-विलापः

## (प्रहसनम्)

ले० यल्. डब्ल्यु. महेश्वरार्यः

सौराष्ट्रो ब्राह्मणः कश्चित्
[1]महेश्वर उपससार
शास्त्राकारं शासितारम्
[2]केशवं शेवधिं गिराम्
आशये कलयन्ति त्यम्
[3]आशापूर्तिप्रचोदितम्
विनाप्यापीडशशिनम्
कर्तुं प्रदानं [4]कौमुद्याः
[5]कौतुकात् कौतुकं श्रितम्"
साष्टांगं कृत्वा प्रणामं स होवाच सौराष्ट्रः-
"भगवन् धर्मतत्वज्ञ, सर्वशास्त्रविदां वर,
संस्कृतभाषां मे ब्रूहि, वाणीं गीर्वाणगणसेविताम्
पाणिनिमुनिपरिष्कृताम् अमरसिंहस्य चाप्यत्यन्तकीर्ति-
दायिनीम् मातरं सर्वभाषाणां, श्रोत्रे पीयूषवर्षिणीम्"

द्विनेत्रस्तु महेश्वरः समीपस्थां ढक्कामादाय, निमीलिताक्षः, किंचित् ध्यात्वा आदिशत्, मार्दंगिकान् ते वामदक्षिणयोर्भागयोर्नादान्, पर्यायक्रमेणोत्पादयन्। स ताण्डवं कर्तुमारभत।

---

1. अहं 2. केशवशास्त्रिणम् 3. आशा = दिक्, अभिलाषश्च 4 कौमुदी = ग्रन्थविशेषः ज्योत्स्ना च 5. कुतूहलम्, दीक्षाकंकणम् च।

"अइउण्, ऋऌक् ए ओङ्
ञमङणनम्-झभञ्-लण्
टिङ्ढा ञ् द्वयसच्णदघ्नञ्
ठक्ठञ् क्वरप् च डुकञ्
तपस्थमितां ताम्तं, डुभृञ्
कुदतिङ् कुदतिङ् डुधाञ्
कुदतिङ् कुदतिङ् तकुदीम्
तकुदीं तकुदीं कुदतिङ्"

अत्रान्तरे काचिदशरीरी आकाशात्पतितः ।

अशरीरी उवाच —

"मा विद्धि [6]भाण्डारागारं । विद्धि मां सकलभाषा भाण्डागारम् । मानुषीन्तनुमुत्सृज्य संस्कृतप्रचारार्थं खे चराम्यहम् । कलिकालमलिनचेतसां चित्तं प्रसादनम् (1) सिकताभ्यस्तैलसाधनम् (2) कुशाग्रेण उदधिशोषणम् (3) श्वलांगूलस्य तैलदण्डाभ्यां ऋजूकरणम् (4) वानराणां च चापल्यबन्धनम् (5) गजानां बिसतन्तुभिर्बन्धनम् ।

सौराष्ट्र होऽवाच –

"अहो सूक्ष्मदेह, अगस्त्यमुनिश्च, जैनाः द्राविडेभ्यः निष्कासिताः विमोचनरहितम्, निरन्तरं शापम् द्रविडेभ्यः अदुः । ते च शूलारोपणभयात् तंजापुरस्य राजानं शरणं प्रापा अत्र च इति इतिहासः प्रवर्तते ।

अशरीरी उवाच –

विषादं मा कुरु बाल, अगस्त्यमुनेरपि शापस्य नैरन्तर्यमपि यावत्

6. भाण्डारकरग्रन्थौ

गमिष्यति । लोके सर्वमपि नश्यति इति वेदान्तडिण्डिमः । द्विनेत्रं महेश्वरं ध्यात्वा मधुरावने तपःकुरु । कालान्तरं प्रतीक्षस्व, क्षमया वर्तस्व, "सहनं सर्वदुःखानां अप्रतीकारपूर्वकम् । चिन्ताविलापरहितं तितिक्षा हि निगद्यते" इति शंकर भगवत्पादैः उच्यते (विवेकचूडामणिः) । एतत्साधकं मन्त्रं उपदिशाम्यहम् –

> द्विनेत्र महेश्वर ! संस्कृतद्वेषिणाम् वैरस्यं कुठारेण छिन्धि छिन्धि । खट्वाङ्गेन व्यपोथय व्यपोथय । मुसलेन निष्पेषय निष्पेषय । अमृतकटाक्षवीक्षणेन तेभ्यः आयुरारोग्यैश्वर्याणि प्रयच्छ प्रयच्छ इति" ।

अत्रान्तरे मार्गोपदेशिका नाम पुस्तकं छिन्नाभिन्नमाकाशात् पपात । ह आकाशात् इमं मन्त्रमपि जंप इति वचः ।

तस्मिन् संघशालायां अग्निसात्करणात् पेट्यन्तस्संरक्षितानि पुस्तकानि अहो महाभाग पीटीरज तव वाग्वैभवं किं कथ्यते । सर्वत्र समस्नेहत्वं जातिद्वेषो, मतद्वेषः च न विद्यते तव । भारतदेशे तव मनोवैशाल्यं कस्यपि न विद्यते । अद्वैती भव [7]महाभाग यशसि आयुरारोग्यैश्वर्येषु च । सौराष्ट्रोऽपि अष्टाध्यायीवत् अ, अ इति मुखं व्यादाय संस्कृताध्ययतात् विरराम ह ।

---

7. पी. टी. राजन्



# गुरुर्नानकः

महम्मदीयानां दण्डयात्राभिः कारणात् राजकीयसांघिकरंगाभ्यां साकं धार्मिकरंगेपि बहूनि परिवर्तनानि समभवन्। हिंदूजनेषु मतविश्वासः क्षीणः, मूढविश्वासाश्च अभिवृद्धाः । नवागन्तुका महम्मदीया हिन्दूनां शिरस्सु आत्ममतविश्वासान् आरोपयितुं अयतन्त । तेन च कारणेन हिन्दूनां महम्मदीयानां च पदे पदे वैराणि प्रचुराण्यभवन्। एतादृशे सन्धिकाले सौभ्रात्रं ऐकमत्यं भक्तिः इति ज्योतिस्त्रयेण पथप्रदर्शक आसीत् भारतीयानां महात्मा नानकः ।

सिक्खमतस्थापनाचार्यः नानकः क्री. श. 1469 वत्सरे लाहोरसमीपे तालवंदिग्रामे अजायत । तस्य पिता मेहता कालूचन्द्रः, माता च तृप्ता देवी । कालूचन्द्रश्च कर्षकः ग्रामणीत्वमपि निर्वहति स्म ।

नानकः आबाल्यं पारमार्थिकविषयचिन्तकः आसीत् । प्राथमिकविद्याभ्यासकाल एव सदाध्यानमग्नः उपाध्यायेभ्यः भगवत्तत्वं बोधयति

स्म । कालाचंद्रश्च स्वपुत्रस्य विद्यायामनभिलाषं परिज्ञाय तं कृषिकर्मणि न्ययोजयत् । किन्तु स तत्रप्यनुत्सुक एव अदृश्यत । तेन तत्पिता तं वाणिज्ये न्ययोजयत् । आपणे स्थितः नानकः तत्रत्यानि वस्तूनि दरिद्रेभ्यः साधुभ्यश्च व्यतरत् ।

एकदा कालूचन्द्रः आवश्यकं धनं प्रदाय स्वसुतं बाल्लनामक-सेवकेन सह सार्थविपणिगमनाय पण्यानयनाय च प्राचोदयत । सार्थविपणौ सुदूरे एव मार्गे तस्य कश्चन भक्तवृन्दः सम्मुखस्थितः । गुरुर्नानकः साधु-जनतर्पणादन्यत् उत्तममपश्यन् स्वकरस्थेन धनेन भक्तान् तान् समतर्पयत् भोजनादिना ।

कालूचंद्रश्च सुतस्य धोरणिं परिवर्तयितुं विवाहमेव शरणं मन्वानः बटालावासिनः मूलानाम्नः सुतया सुलक्षान्या अस्य परिणयं समपादयत् ।

एतेनापि अस्मिन् परिवर्तनं नासीत् । एष प्रायः अटवीं गत्वा एकान्ते ध्यानमग्नः आसीत् ।

नानकस्य सहोदरी नानकी, तस्याः पतिः जयरामः । स नवाब-दौलतखान् लोदेः दिवानः आसीत् । सः नानकस्य तालवंडि संस्थाने उपाधिं अकल्पयत् । उद्योगनिर्वहणे श्रद्धायुक्तस्सन् नानकः नवाबस्य प्रजानां च आदरं आर्जयत् ।

नानकस्य क्री. श. 1494 तमे वत्सरे श्रीचन्द्रनामा, 1947 तमे वत्सरे लक्ष्मीचन्द्रनामा च पुत्रौ अजायेताम् । श्रीचन्द्रः उदासिसमाजं सन्यासिकूटं च संस्थाप्य मोक्षपथमयात् । लक्ष्मीचन्द्रश्च गृहस्थः संसार-भारमवहत् ।

नानकः अन्ते स्वपदवीं परित्यज्य स्वार्जितम् च धनम् दरिद्रेषु दीनेषु च विभज्य फकीरः (सन्यासी) सन् अरण्येषु वस्तुमारेभे । सदा-

ध्यानपरायणः भगवल्लीलाविशेषान् गायति स्म । तदीयानि तानि गीता-न्येवेदानीम् आदिग्रन्थरूपेण (ग्रन्थसाहबनाम्ना) पूज्यन्ते । ताल्वंदि संस्थानाधिपस्य मन्त्री मर्दनः स्वतंत्रीवाद्ये नानकगीतानि गायति स्म ।

मोगलचक्रवर्तिनः बाबरस्य नानके महानादर आसीत् । नानकस्य इच्छानुगुणं बाबरः अमीनाबादे कारानिरुद्धान् दोषिणः अमोचयत् । नानकः बाबरं आशीर्भिः संमान्य तं पानद्यूताभ्यां अमोचयत् । नानकः कतिचन दिनानि ध्यानमग्नः निद्राहारौ विस्मरति स्म ।

नानकः प्रजासु भक्तिमुद्भावयितुं काशीहरिद्वारायोध्यादि पुण्य-क्षेत्राणि द्विगुणपावनान्यकरोत् । सिंहल-बर्मा-खांदहर-टर्की-मक्का-मदीना अपि सोऽपश्यत् । तत्र तत्र विद्यमानान् पण्डितान् मौल्वीश्च संगम्य सिक्खमतप्राशस्त्यं सौभ्रातृत्वम् च प्राकटयत् । हिन्दूमुस्लिमभेदं निरर्थकं कथयन् एक एव ईश्वरस्सर्वव्यापीति, तत्स्तुतिरेव सर्वसौख्यदायिनीति च प्राकाशयत् ।

एकदा किल नानकः मक्कामगच्छत् । तदा स काबादिशि आत्म-पादौ प्रसार्य निद्राति स्म । तत् दृष्ट्वा (खाजी) मुख्यगुरुः रुक्नुद्दीनः कुपितस्सन् अपृच्छत् – रे किमेतत् ? महापराधिन् भगवध्यानमंदिरं प्रति पादौ प्रसार्य स्वपिषि । नानकश्च प्रशान्त एव ? भगवन्, दयया दैव-शून्यायां दिशि मत्पादौ परिवर्तयेति प्रार्थयत । खाजी अतीव कुपितः तत्पादौ अन्यतो यदा आचकर्ष तदा तत् ध्यानमंदिरं अपि तद्दिशमेव परिभ्रमत् । तेन विभ्रांतश्च खाजी तद्भक्तिं बहुधा प्रशंसन् अपूजयत् ।

नानकः संघदुराचारान् निर्दाक्षिण्यं अखण्डयत्, हृदयनैर्मल्य-संपादनपूर्वकं निश्चलभक्तिं सम्पादयितुं प्रजाः प्राबोधयत् । जातिकुल-मतभेदान्निरस्यन् सर्वमानवसौभ्रात्रमुपादिशत । नामसंकीर्तनस्य प्राधान्य-

मदात्। भगवदाराधने पुरुषैस्साकं स्त्रीणामपि प्रवेशमाचकांक्षे । देवमर्चय, मानवं सेवस्व, तदेव ते स्वर्गकवाटद्वय"मिति अवोचत्।

नानकगीतानि सर्वाण्यपि "जप जी" इति व्यवह्रियन्ते। जपजीग्रन्थः पंचखण्डत्वेन विभक्त आस्ते। धर्मखण्डः, ज्ञानखंडः, स्वर्णखंडः, कर्मखण्डः, सत्यमहिमखंड इति तेषां नामानि। "वाहे गुरु" इति गुरुनानकोपदिष्टो मन्त्रः। "एकोंकार सत्नां कर्ता सरब निर्बनिर्वैर अकस्मुरत् अजुनी सर्वै भांग गुरुपर्बाद्" इति सर्वदा उच्चार्यः महामन्त्रः सिखानाम्। अस्य भावोयम् – देव एक एव, तस्य नाम सत्यम्, स एव स्रष्टा, स वासुदेवः, तस्य भीतिशोकौ न स्तः, तस्य न द्वेष्यः, स नित्यः, स्वयम्भूः, स्वाधारः, अज्ञानमार्ताण्डः, दयामयः इति। श्रीनानकः देवनागरीलिपिं संस्कृत्य गुरुमुखीं लिपिं आविरभावयत्। प्रतिगुरुद्वारं गुरुगीतसंग्रहरूपः ग्रन्थसाहेब पूज्यते।

कालक्रमेण कबीरादिभक्तानां गीतान्यपि ग्रन्थसाहेबे योजितानि एकेश्वरोपासनं नामसंकीर्तनं च प्रजासु प्रबोधयितुं अयमाचार्यः अतीव श्रमितवान्। हिन्दूमुस्लिमसौभ्रात्राय अनेन महान् यत्न आचरितः।

भागवतः सिख्खमतस्थापकः नानकः क्री. श. 1538 वत्सरे एकोनसप्ततितमे वयसि सिद्धिमयात्॥

(आन्ध्रप्रभापत्रसौजन्यात्)



# पदार्थविज्ञानसारः

## उपोद्घातः

अयं ग्रन्थः श्रीनाथदवे इत्यादिभिः कलि 4960 संवत्सरे सिद्धार्थि-मार्गकृष्णषष्ठीगुरुवासरे (16–12–1859) श्री मो. परशुरामशास्त्रिणा परिष्कृतः प्रकाशितः आसीत् । एषा च चेन्नपुरसरस्वतीभाण्डाराध्यक्षानुमत्या विरचितमित्येतावन्मात्रमेव सूचितम् तत्र । ग्रन्थकर्तुर्नाम नैव निबद्धमस्ति । ग्रन्थपर्यालोचने एतद्रचयिता वंगदेशीय इति स्पष्टं ज्ञायते यतः द्वित्रस्थलेषु वंगदेशप्रस्तावेन साकं वंगीयपदानि च वर्तन्ते । न ज्ञायते किं कारणं तादृशरचयितुः पंडितस्य नाम्नः दूरीकरणे इति । एष च संस्कृताभ्यासकांक्षिणाम् बहूपयुक्त इति धिया संस्कृतवाङ्मय-प्रविविक्षूणां उपकाराय गैर्वाण्यां क्रमशः मुद्रयितुं संकल्पितः । प्राप्ते पुस्तके अन्तिमपत्रं (64, 65 पुटौ) त्रुटितं वर्तते । एतत्पुस्तकवद्भिस्सहृदयैः तत्पत्रमात्रं अथवा तस्य प्रतिलिपिर्वा प्रेषयित्वा ग्रन्थस्य पूरणे साहाय्यमाचरितुं प्रार्थये ।

अत्र पुस्तके अत्यावश्यकानां खगोळवर्षहिमप्रस्रवणनदीवायुभूकंपशक्रचापधूमकेतु विद्युदशनिमनुष्य मृगपक्षिसर्पक्रिमिकीटधातुलोहरत्नादीनां पदार्थानां स्वरूपादिकं गुरुशिष्यप्रश्नोत्तररूपेण सुलभशैल्या संगृहीतं वर्तते। मन्ये अनेन प्रकाशनेन विद्यार्थिनां महान् उपकारो भवेदिति ।

इति

यन्. रामनाथार्यः

प्रकाशकः

श्रीगुरुभ्यो नमः

# पदार्थविज्ञानसारः

## अथ गुरुशिष्ययोः प्रश्नोत्तरकथोपकथनव्याजेन ग्रन्थावतरणम्



गुरुः – हे शिष्य, त्वं भूगोळवृत्तान्तं शिक्षितवान्। अधुना किमन्यच्छिक्षितुमिच्छसि ? तन्मां वद ।

शिष्यः हे गुरो, परमेश्वरसृष्टनिखिलविषयान् ज्ञातुमहमिच्छामि ।

गुरुः - तदतीव भद्रम् । यतः सर्वैर्धीमद्भिर्लोकैः सर्वदैवेश्वरसृष्टविषयान् विज्ञायातीव संतुष्यते ।

शिष्यः-अहो ! महाशय, परमेश्वरसृष्टविषयपरिज्ञानेन किमस्माकं प्रयोजनं स्यात् ?

गुरुः - सुखं, ज्ञानस्य वृद्धिश्चेत्युभयमेव फलं तस्माद्भवति। स्वसृष्टविषयान् दर्शयितुमीश्वरः शरीरिणां खलु नयनान्यसृजत् । अतः तैस्तदवलोकनमुचितं सुखप्रदं चेति ।

शिष्यः-अहं तावदबोधः किमप्यीश्वरसृष्टविषयान् ज्ञातुं शक्नोमि ? तत्र किमधिकबोधापेक्षा नास्ति ?

गुरुः - न तत्राधिकबोधापेक्षा । परन्तु ज्ञानवानज्ञश्चोभावपि तान् ज्ञातुमर्हतः। ज्ञात्वा तौ सुखिनौ भवितुमर्हतश्चेति न ज्ञानाधिक्यापेक्षास्ति । ईश्वरसृष्टवस्तु च सर्वेषां गोचरे विद्यते । परन्तु एतेषां वस्तूनां दर्शनविवेचने केवलमावश्यके ।

शिष्यः एतस्मिन् जगति किं किं वस्तु तावदस्ति ?

गुरुः - आत्मा अनात्मा चेत्येतावद्द्विमयं वस्त्वस्ति ।

शिष्यः कस्तावदात्मा ?

गुरुः - एतावानेवात्मा। येनास्माकं बुद्धिर्विवेचनादि च भवति। एवं स चात्मा अदृश्योऽस्पृश्यश्च भवति।

शिष्यः-कस्तावदात्मा ?

गुरुः - यद्यदेव कृत्स्नं वस्तु दृश्यं स्पृश्यं वा भवति। तथा विवेचनादि-धर्मरहितं च स्यात्तदेव कृत्स्नमनात्मा।

शिष्यः-अहो! महाशय, मयैतद्बुद्धम्। परन्त्वनात्मविषये कश्चिदपरः प्रभेदोस्ति ?

गुरुः - अस्त्यत्र कश्चित् प्रभेदोवधीयतां। आकर्षणं विस्तारः खण्डनीयत्वं कठिनत्वमाकारोऽस्वतन्त्रगमनं चैवमादिभिर्गुणैरनात्मवस्तूपहितं भवति। त्वयैतत् श्रुतं वा ?

शिष्यः-नैव महोमहाशय। नाहमेतत् श्रुतवान्। यदि विशेषयित्वामामेतद् बोधयसि तदा ते महाननुग्रहप्रकाशस्स्यात्।

गुरुः - आकर्षणं नाम येन वस्तुनो नानावयवाः परस्परं संयुक्ता भवन्ति। एवं बृहद्वस्तुनि क्षुद्रवस्तुनो दृढाकर्षणे सति तत्क्षुद्रं तस्मान्नपतति। यथा पृथिव्यामाकृष्टं प्रासादादिकं नापैति। विस्तारो नाम वस्तु-गता दीर्घता तद्गतं प्रसारितत्वमौन्नत्यं चेति। खण्डनीयत्वं नाम येन च वस्तुनो बहवोंशा भवन्ति। कठिनत्वानामसुकरत्वेन दुष्कर-त्वेन वा येन वस्तु वेधनीयं भवति। आकारो नाम वस्तुनो रूपं। अस्वतन्त्र गमनं नाम स्वतोगमनादिविरहितस्य वस्तुनोऽन्यद्वारा चलनं। एवं चलितं सत् बाधामन्तरेण सततं चलति। अनात्म-न्येतावन्तो गुणाः अतिरिक्ता अप्यपरे गुणास्सन्ति। किन्तु बाहुल्य भियाऽमुख्यत्वाच्च न तेभिहिताः।

(सशेषः)

---

## सौम्यदक्षिणायनपरीक्षासु सर्वप्रथमतयोत्तीर्णाः



यन्. कण्णन्, मदुरै
कोविदः



यस्. ललिता, टि. नगर
विचक्षणा



जी. श्रीराममूर्तिः, नेल्लरु
अभिज्ञः



वि. यस्. रामानुजन्, तिरुवल्लिक्केणी
परिचयः

# नीतिश्लोकाः

विद्वान् के. वेंकटरेड्डिः, गीताश्रमम्, प्रोद्दुटूरु

दिवा पश्यति नोलूकः काको नक्तं न पश्यति ।
विद्याविहीनो मूढस्तु दिवा नक्तं न पश्यति ॥

काकः वर्तते खलु । स नक्तम् न पश्यति, दिवैव पश्यति । उलूकः तु दिवा न पश्यति, किन्तु नक्तम् एव पश्यति । विद्याहीनः मूढः तु दिवा नक्तमपि न पश्यति इति श्लोकभावः । विद्याहीनः काकोलूकाभ्यां अपि नीचः इति ज्ञायते अनेन ।

सुखार्थी चेत् त्यजेत् विद्यां विद्यार्थी चेत् त्यजेत् सुखम् ।
सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ॥

लोके यः विद्यां वांछति सः सुखम् त्यजेत् । सुखं वांछति यदि विद्यां अवश्यम् त्यजेत् । सुखार्थिनः जनस्य विद्या कुत्र लभ्यते ? विद्यार्थिनः सुखं कुत्र लभ्यते ? सुखं विद्या वा एकम् एव वांछनीयम् इति श्लोकाभिप्रायः ।

अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ।
कर्तव्यमेव कर्तव्यं एष धर्मस्सनातनः ॥

प्राणेषु कण्ठगतेष्वपि कर्तव्यभिन्नम् सदा अकर्तव्यम् एव । सर्वे जनाः कर्तव्यमेव कर्तुं प्रयत्नशीलाः भवन्तु । एषः धर्मः अतीव सनातनः आचरणीयश्च ।



## आगामि सौम्योत्तरायणपरीक्षाणां (1970 March)

## कार्यक्रमः

| विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणस्य अन्तिमा तिथिः | विलम्बशुल्केन सह आवेदनपत्राणां प्रेषणस्य अन्तिमा तिथिः | परीक्षा प्रचलनतिथयः |
|---|---|---|
| 20—1—1970 | 31—1—1970 | 1970 मार्चमासे 7, 8, 9 तिथयः |

पूरणीयानि आवेदनपत्राणि विना मूल्यं सभया दीयेरन्। अपि तु पोस्टलव्ययार्थं 0–25 मात्रं अभ्यर्थनेन साकं प्रेषणीयम्।

* पाठ्यनियमावलिश्च इदानीन्तनी (1970) आगामिनि साधारण-वत्सरेपि (=1971 मार्चपरीक्षापर्यन्तम्) अनुस्यूता भवेत्। तावत्पर्यन्तं पाठ्यविषये आवाप उद्वापः परिवृत्तिर्वा न भवति।

परिचयाभिज्ञविचक्षणपाठ्यपुस्तकानि सर्वाणि समर्थकोविदपाठ्येषु कतिचन च अस्यां सभायां लभ्येरन्।

प्रधानमन्त्री, संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ० प्र०) इति संकेतेनैव पत्रव्यवहारः कर्तव्यः।

सं. भा. प्र. सभा,
15—11—69.

कौ० श्रीनिवासाचार्यः,
परीक्षामन्त्री.



आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
R. N. 8145/60. Postal R. No. H. 493.

# गैर्वाणी

भारतसर्वकारेण पुरस्कृता च

वार्षिकम रू. ४-००

★

## प्रहेलिके

राजन् कमलपत्राक्ष तत्ते भवतु चाक्षयम् ।
आसादयति यद्रूपं करेणुः करणैर्विना ॥

सख्योः संभाषणमेतत् – अर्थः – हे सरसीरुहलोचने, अमुं एनम् कुन्दकुञ्जम् = मल्लीलतागृहम्, पश्य, (सखीभाषणमिदम्) । नायिका प्रत्युत्तरयति– सखि, अमुना = मुकाररहितेन, कुन्दकुञ्जेन – मल्लीकुंजेन, मे किं प्रयोजनम् ? मुकुन्दसहितेनैव अनेन कुजेन मे आनन्दः, केवल-कुञ्जेनैव विरहव्यथाभिवृद्धिमात्रमेवेति भावः ॥

कुन्दकुञ्जममुं पश्य सरसीरुहलोचने !
अमुना कुन्दकुञ्जेन सखि मे किं प्रयोजनम् ?

अर्थः – कमलपत्राक्ष हे राजन्, करेणुः इति शब्दः, करणैः (शुण्डाद्यवयवैः) ककाररेफ णकारैः, विना = विरहितः यथा तथा, यद्रूपं =यादृशं (आकारं) शब्दरूपं (प्राप्नोति) तत्, ते, अक्षयं=शाश्वतं भवतु । करेणुः इत्यत्र (क् र् ण्) इति करणानां दूरीकरणे अ+ए+उ इति भवति । अत्र प्रथम द्वितीयाचोः वृद्धौ, द्वितीयतृतीयाचोः अयादेशे च विहिते यादृशं भवति तादृशं रूपं = आयुः, ते अक्षयं भवत्विति आशीः ॥

Published by Sri N. Ramanatha Iyer, B. A., B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor, (A. P.) C 1500.